# Document Information

Text title : kAshivishvanAthasuprabhAtam
File name : kAshivishvanAthasuprabhAtam.itx
Category : suprabhAta
Location : doc_shiva
Language : Sanskrit
Subject : philosophy/hinduism/religion
Transliterated by : N.Balasubramanian bbalu at satyam.net.in
Proofread by : N.Balasubramanian bbalu at satyam.net.in
Latest update : October 29, 2008
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ श्रीकाशीविश्वनाथसुप्रभातम् ॥

## ॥ श्रीकाशीविश्वनाथसुप्रभातम् ॥

॥ श्रीगुरुभ्यो नमः॥

विश्वेशं माधवं धुण्डिं दण्डपाणिं च भैरवम् ।
वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम् ॥ १॥

उत्तिष्ठ काशि भगवान् प्रभुविश्वनाथो
गङ्गोर्मि-सङ्गति-शुभैः परिभूषितोऽब्जैः ।
श्रीधुण्डि-भैरव-मुखैः सहिताऽऽन्नपूर्णा
माता च वाञ्छति मुदा तव सुप्रभातम् ॥ २॥

ब्रह्मा मुरारिस्त्रिपुरान्तकारिः
भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रः शनि-राहु-केतवः
कुर्वन्तु सर्वे भुवि सुप्रभातम् ॥ ३॥

वाराणसी-स्थित-गजानन-धुण्डिराज
तापत्रयापहरणे प्रथित-प्रभाव ।
आनन्द-कन्दलकुल-प्रसवैकभूमे
नित्यं समस्त-जगतः कुरु सुप्रभातम् ॥ ४॥

ब्रह्मद्रवोपमित-गाङ्ग-पयः-प्रवाहैः
पुण्यैः सदैव परिचुम्बित-पादपद्मे ।
मध्ये-ऽखिलामरगणैः परिसेव्यमाने
श्रीकाशिके कुरु सदा भुवि सुप्रभातम् ॥ ५॥

प्रत्नैरसङ्ख्य-मठ-मन्दिर-तीर्थ-कुण्ड-
प्रासाद-घट्ट-निवहैः विदुषां वरैश्च
आवर्जयस्यखिल-विश्व-मनांसि नित्यं
श्रीकाशिके कुरु सदा भुवि सुप्रभातम् ॥ ६॥।

के वा नरा नु सुधियः कुधियो.अधियो वा

वाञ्छन्ति नान्तसमये शरणं भवत्याः ।
हे कोटि-कोटि-जन-मुक्ति-विधान-दक्षे
श्रीकाशिके कुरु सदा भुवि सुप्रभातम् ॥ ७॥

या देवैरसुरैर्मुनीन्द्रतनयैर्गन्धर्व-यक्षोरगैः
नागैर्भूतलवासिभिर्द्विजवरैस्संसेविता सिद्धये ।
या गङ्गोत्तरवाहिनी-परिसरे तीर्थैरसङ्ख्यैर्वृता
सा काशी त्रिपुरारिराज-नगरी देयात् सदा मङ्गलम् ॥ ८॥

तीर्थानां प्रवरा मनोरथकरी संसार-पारापरा
नन्दा-नन्दि-गणेश्वरैरुपहिता देवैरशेषैः-स्तुता ।
या शम्भोर्मणि-कुण्डलैक-कणिका विष्णोस्तपो-दीर्घिका
सेयं श्रीमणिकर्णिका भगवती देयात् सदा मङ्गलम् ॥ ९॥

अभिनव-बिस-वल्ली पाद-पद्मस्य विष्णोः
मदन-मथन-मौलेर्मालती पुष्पमाला ।
जयति जय-पताका काप्यसौ मोक्षलक्ष्म्याः
क्षपित-कलि-कलङ्का जाह्नवी नः पुनातु ॥ १०॥

गाङ्गं वारि मनोहारि मुरारि-चरणच्युतम् ।
त्रिपुरारि-शिरश्चारि पापहारि पुनातु माम् ॥ ११॥

विघ्नावास-निवासकारण-महागण्डस्थलालम्बितः
सिन्दूरारुण-पुञ्ज-चन्द्रकिरण-प्रच्छादि-नागच्छविः ।
श्रीविघ्नेश्वर-वल्लभो गिरिजया सानन्दमानन्दितः (पाठभेद विश्वेश्वर)
स्मेरास्यस्तव धुण्डिराज-मुदितो देयात् सदा मङ्गलम् ॥ १२॥

कण्ठे यस्य लसत्कराल-गरलं गङ्गाजलं मस्तके
वामाङ्गे गिरिराजराज-तनया जाया भवानी सती ।
नन्दि-स्कन्द-गणाधिराज-सहितः श्रीविश्वनाथप्रभुः
काशी-मन्दिर-संस्थितोऽखिलगुरुः देयात् सदा मङ्गलम् ॥ १३॥

श्रीविश्वनाथ करुणामृत-पूर्ण-सिन्धो
शीतांशु-खण्ड-समलङ्कृत-भव्यचूड ।
उत्तिष्ठ विश्वजन-मङ्गल-साधनाय
नित्यं सर्वजगतः कुरु सुप्रभातम् ॥ १४॥

श्रीविश्वनाथ वृषभ-ध्वज विश्ववन्द्य
सृष्टि-स्थिति-प्रलय-कारक देवदेव ।
वाचामगोचर महर्षि-नुताङ्घ्रि-पद्म

वाराणसीपुरपते कुरु सुप्रभातम् ॥ १५॥

श्रीविश्वनाथ भवभञ्जन दिव्यभाव
गङ्गाधर प्रमथ-वन्दित सुन्दराङ्ग ।
नागेन्द्र-हार नत-भक्त-भयापहार
वाराणसीपुरपते कुरु सुप्रभातम् ॥ १६॥

श्रीविश्वनाथ तव पादयुगं नमामि
नित्यं तवैव शिव नाम हृदा स्मरामि ।
वाचं तवैव यशसाऽनघ भूषयामि
वाराणसीपुरपते कुरु सुप्रभातम् ॥ १७॥

काशी-निवास-मुनि-सेवित-पाद-पद्म
गङ्गा-जलौघ-परिषिक्त-जटाकलाप ।
अस्याखिलस्य जगतः सचराचरस्य
वाराणसीपुरपते कुरु सुप्रभातम् ॥ १८॥

गङ्गाधराद्रितनया-प्रिय शान्तमूर्ते
वेदान्त-वेद्य सकलेश्वर विश्वमूर्ते ।
कूटस्थ नित्य निखिलागम-गीत-कीर्ते
वाराणसीपुरपते कुरु सुप्रभातम् ॥ १९॥

विश्वं समस्तमिदमद्य घनान्धकारे
मोहात्मके निपतितं जडतामुपेतम् ।
भासा विभास्य परया तदमोघ-शक्ते
वाराणसीपुरपते कुरु सुप्रभातम् ॥ २०॥

सूनुः समस्त-जन-विघ्न-विनास-दक्षो
भार्याऽन्नदान-निरता-ऽविरतं जनेभ्यः ।
ख्यातः स्वयं च शिवकृत् सकलार्थि-भाजां
वाराणसीपुरपते कुरु सुप्रभातम् ॥ २१॥

ये नो नमन्ति न जपन्ति न चामनन्ति
नो वा लपन्ति विलपन्ति निवेदयन्ति ।
तेषामबोध-शिशु-तुल्य-धियां नराणां
वाराणसीपुरपते कुरु सुप्रभातम् ॥ २२॥

श्रीकण्ठ कण्ठ-धृत-पन्नग नीलकण्ठ
सोत्कण्ठ-भक्त-निवहोपहितोप-कण्ठ ।
भस्माङ्गराग-परिशोभित-सर्वदेह

वाराणसीपुरपते कुरु सुप्रभातम् ॥ २३॥

श्रीपार्वती-हृदय-वल्लभ पञ्च-वक्त्र
श्रीनील-कण्ठ नृ-कपाल-कलाप-माल ।
श्रीविश्वनाथ मृदु-पङ्कज-मञ्जु-पाद
वाराणसीपुरपते कुरु सुप्रभातम् ॥ २४॥

दुग्ध-प्रवाह-कमनीय-तरङ्ग-भङ्गे
पुण्य-प्रवाह-परिपावित-भक्त-सङ्गे ।
नित्यं तपस्वि-जन-सेवित-पाद-पद्मे
गङ्गे शरण्य-शिवदे कुरु सुप्रभातम् ॥ २५॥

सानन्दमानन्द-वने वसन्तं आनन्द-कन्दं हत-पाप-वृन्दम् ।
वाराणसी-नाथमनाथ-नाथं श्रीविश्वनाथं शरणं प्रपद्ये ॥ २६॥

Encoded and proofread by N. Balasubramanian, bbalun@dataone.in

---